# शून्यतासप्ततिः

**शून्यतासप्ततिः**

आचार्य नागार्जुन

---

शून्यतासप्ततिः

स्वोपज्ञवृत्त्या समन्विता

उत्पादस्थितिभङ्गास्तिनास्तिहीनसमोत्तमम् ।
लौकिकव्यवहारात्तु बुद्धेनोक्तं न तत्त्वतः ॥ १ ॥
आत्मा कश्चिन्न चानात्मा ह्यात्मानात्मेतरश्च न ।
वाच्यः सर्वः स्वभावेन शून्यो निर्वाणसदृशः ॥ २ ॥
हेतुप्रत्ययसामग्र्यां सर्वस्यां वा पृथक्पृथक् ।
सर्वभावस्वभावो न तस्माच्छून्यं हि विद्यते ॥ ३ ॥
भावो नोत्पद्यते भावान्नाभावोऽविद्यमानतः ।
सदसन्न विरोधान्न स्थितिभङ्गौ ह्यजातितः ॥ ४ ॥
न जायते यदा जातं नाजातमपि जायते ।
जाताजाताच्च नैवं हि जायमानोऽपि जायते ॥ ५ ॥
फले स्यात्फलवान् हेतुः नास्तित्वेऽहेतुना समः ।
सदसत्त्वे विरोधित्वं त्रैकाल्ये नोपपद्यते ॥ ६ ॥
नैकत्वेऽनेकवृत्तिर्न नोऽनेकत्वे हि नैकता ।
तत्प्रतीत्यसमुत्पन्नभावास्ते ह्यनिमित्तकाः ॥ ७ ॥
द्वादशाङ्गो ह्यनुत्पादः समुत्पादः प्रतीत्यजः ।
एकचित्ते न तद्युक्तं बहुष्वपि न युज्यते ॥ ८ ॥
आत्मा नास्ति न चानात्मा नित्यानित्ये दुःखं सुखम् ।
शुचिर्नाशुचिरप्यस्ति विपर्यासा न सन्त्यतः ॥ ९ ॥
तदभावे न चाविद्या विपर्यासचतुष्कजा ।
तदभावान्न संस्काराः स्युः शेषा अपि तादृशाः ॥ १० ॥
संस्कारेऽसत्यविद्या न नैव स तदभावतः ।
परस्परं हेतुभूते स्वभावेन न सिध्यतः ॥ ११ ॥
स्वयं स्वभावतोऽसिद्धं परंस्तज्जनयेत्कथम् ।
अतोऽसिद्धपरैस्तैर्न जन्येरन् प्रत्ययैः परे ॥ १२ ॥
पिता पुत्रो न पुत्रोऽपि पितान्योन्यं न तौ विना ।
तथा न युगपत्तौ हि द्वादशाङ्गं तथैव च ॥ १३ ॥

प्रतीत्य विषयान् स्वप्ने न स्याद्दुःखं सुखं यथा ।
विषयो न तथैवापि तं प्रतीत्य प्रतीत्यजः ॥ १४ ॥
स्वभावाद्धि न भावाश्चेदुत्तमाधममध्यमाः ।
नानात्वेऽसति हेतुभ्योऽभिनिर्वृत्तिर्न सिध्यति ॥ १५ ॥
भावाः स्वभावतः सिद्धा नोऽप्रतीत्य प्रतीत्य सत् ।
निःस्वभावाः कुतो भावाः स्वभावोऽपि नस्थाप्यते ॥ १६ ॥
स्वभावपरभावौ वा भङ्गोऽभावेऽपि वा कुतः ।
स्वभावपरभावौ चाभावस्तेऽतो विपर्ययाः ॥ १७ ॥
शून्यत्वे सति नोत्पादो निरोधोऽपि न विद्यते ।
स्वभावशून्यतायां हि कुतः स्यादुदयव्ययौ ॥ १८ ॥
अभावेऽसति भावो न भावाभावौ न चैकदा ।
ऋते भावं न चाभावो भावोऽभावः सदा भवेत् ॥ १९ ॥
न स्वतो नापि परतोऽभावो भावं विना न हि ।
अत एव न भावोऽस्त्यभावो न तदभावतः ॥ २० ॥
सति भावे शाश्वतत्वं व्युच्छेदस्तदभावतः ।
उभयं हि सतो भावाद्भावोऽतो नाभ्युपेयते ॥ २१ ॥
सन्तानात्तन्न सन्तानं भावो निर्वर्त्य नश्यति ।
सिध्यतीदं न सन्तानोच्छेददोषश्च पूर्ववत् ॥ २२ ॥
दृष्ट्वा निर्वृत्तिमार्गोक्तिः शून्यत्वान्नोदयव्ययौ ।
अदोऽन्योन्यविरोधाद्धि विरुद्धानं च दर्शनात् ॥ २३ ॥
यद्युत्पादनिरोधौ न निर्वाणं किन्निरोधतः ।
न निर्वाणमनुत्पादानिरोधौ यौ स्वभावतः? ॥ २४ ॥
निरोधो यदि निर्वाणं ह्युच्छेदः शाश्वतोऽन्यथा ।
तस्माद्भावो न चाभावोऽप्यनुत्पादानिरोधता ॥ २५ ॥
काचित्स्थितिर्हि निर्वाणमभावोऽपि च तद्भवेत् ।
अभावेऽपि हि तन्नैवाभावाभावेऽपि तच्च न ॥ २६ ॥
न स्वतो लक्षणं लक्ष्याल्लक्ष्यं सिध्यति लक्षणात् ।
नाप्यन्योन्यमसिद्धस्यासिद्धो नैव हि साधकः ॥ २७ ॥
एतेन कारणं कार्यं वेदनावेदकादयः ।
दृश्यद्रष्ट्रादिकाः सर्वे केऽपि चोक्ता अशेषतः ॥ २८ ॥
अस्थितेश्च मिथः सिद्धेः स्वतोऽसिद्धेश्च सम्प्लवात् ।
भावाभावाच्च त्रैकाल्यमसन्मात्रं विकल्पना ॥ २९ ॥
उत्पादस्थितिभङ्गा न त्रयं संस्कृतलक्षणम् ।
तस्मान्न विद्यते किञ्चित्संस्कृतं नाप्यसंस्कृतम् ॥ ३० ॥
भग्नो न भज्यतेऽभग्नोऽप्यस्थितस्य न च स्थितिः ।
स्थितस्यापि स्थितिर्नासन् संश्चाप्युत्पद्यते न हि ॥ ३१ ॥
न सन्नासन्न सदसन्नैको नानेक इत्यपि ।

संस्कृतोऽसंस्कृतः सर्वे कोटिष्वास्वेव ते गताः ॥ ३२ ॥
अस्ति कर्मस्वकत्वं हि कर्मकर्मफलं तथा ।
कर्मणोऽविप्रणाशश्च दिदेश भगवान् गुरुः ॥ ३३ ॥
अनिरुद्धमनुत्पन्नं कर्मोक्तं निःस्वभावकम् ।
आत्मग्रहाद्धि तज्जातं जनकोऽपि विकल्पतः ॥ ३४ ॥
यदि स्वभावतः कर्म तज्जः कायोऽपि शाश्वतः ।
विपाकदुःखवन्न स्यात्, स्यादात्मैवापि कर्म च ॥ ३५ ॥
कर्म प्रत्ययजं किञ्चिनास्त्यप्रत्ययजं न च ।
मायावत्सर्वसंस्काराः गन्धभुक्पुर्मरीचिवत् ॥ ३६ ॥
क्लेशकारणकं कर्म संस्काराः क्लेशकर्मतः ।
कर्महेतुश्च कायोऽपि त्रयं शून्यं स्वभावतः ॥ ३७ ॥
कर्मण्यसति कर्ता न द्वयाभावे न तत्फलम् ।
तदभावे न भोक्ता स्यादसत्त्वाच्च विविक्तता ॥ ३८ ॥
योऽपश्यत्कर्मशून्यत्वं सम्यग्ज्ञानेन कम न ।
कर्मण्यसति कर्मभ्यः समुत्पन्ना न सन्ति वै ॥ ३९ ॥
निर्मिमीते यथा ऋद्ध्या भगवांश्च तथागतः ।
तेन निर्मितकेनापि ह्यन्यो निर्मीयते पुनः ॥ ४० ॥
बुद्धनिर्मितकः शून्यः का तन्निर्मितके कथा ।
यत्किञ्चित्कल्पनामात्रसत्त्वं तच्चोभयोस्तथा ॥ ४१ ॥
कर्ता निर्मितकेनेव कर्म निर्मितसदृशम् ।
शून्यं स्वभावतो यत्सत्कल्पनामात्रमेव तत् ॥ ४२ ॥
कर्मकर्ता न निर्वाणं यदि कर्म स्वभावतः ।
इष्टानिष्टफलं न स्यात्तद्भावो यदि नास्ति वै ॥ ४३ ॥
सच्चाप्यस्ति ह्यसच्चापि सदसच्चापि विद्यते ।
सुगमा न हि बुद्धानामाभिप्रायिकदेशना ॥ ४४ ॥
रूपं चेद्भूततो जातं तद्रूपं स्यादतत्त्वतः ।
स्वभावान्न हि तन्नापि परतस्तदभावतः ॥ ४५ ॥
एकस्मिन्न चतुःसत्त्वं सन्नैकं हि चतुर्ष्वपि ।
असच्चतुर्महाभूतापेक्षं रूपं क्व सिध्यति ॥ ४६ ॥
लिङ्गादिति न तल्लिङ्गमत्यन्ताग्रहणान्ननु ।
हेतुप्रत्ययजं सत्त्वे न लिङ्गं नेति युज्यते ॥ ४७ ॥
रूपस्य ग्रहणं चेत्स्यात्स्वस्वभावग्रहो भवेत् ।
असन्निमित्तया बुद्ध्या ह्यसद्रूपग्रहः कथम् ॥ ४८ ॥
बुद्ध्या क्षणिकया रूपं नाप्यते क्षणिकं यदा ।
तदानागतरूपं चातीतं किमिव गृह्यते ॥ ४९ ॥
कदापि वर्णसंस्थाने यदा नैव पृथक्पृथक् ।
नैकग्रहो हि भिन्नानां ह्युभे रूपं प्रसिध्यतः ॥ ५० ॥

न रूपे नापि मध्ये हि चक्षुर्बुद्धिर्न चक्षुषोः ।
चक्षुः प्रतीत्य रूपं च विपर्यासो विकल्पना ॥ ५१ ॥
चक्षुः पश्यति नात्मानं रूपं पश्येन्नु तत्कथम् ।
चक्षुर्निरात्मकं रूपं शेषाण्यायतनान्यपि ॥ ५२ ॥
चक्षुः स्वभावतः शून्यं शून्यञ्च परभावतः ।
शून्यं तथैव रूपञ्च शेषाण्यायतनान्यपि ॥ ५३ ॥
संस्पर्शेन सहैकं स्यात्तदान्येषां हि शून्यता ।
शून्यं नापेक्षतेऽशून्यं ह्यशून्यं चापि शून्यताम् ॥ ५४ ॥
नास्ति स्वभावसंयोगः त्रिकमस्थितमप्यसत् ।
तत्स्वभावात्मसंस्पर्शो नास्त्यतो वेदनापि सत् ॥ ५५ ॥
अन्तरायतनं प्राप्य विज्ञानं बाह्यमेव वा ।
जायतेऽतो न विज्ञानं शून्यं मायामरीचिवत् ॥ ५६ ॥
विज्ञेयापेक्षयोत्पादाद्विज्ञानं नास्ति सद्ध्रुवम् ।
ज्ञातुश्चाविद्यमानत्वमसत्त्वाज्ज्ञानज्ञेययोः ॥ ५७ ॥
कश्चिन्नित्यो ह्यनित्यो वानित्यं सर्वं च नास्ति वा ।
भावे नित्यं ह्यनित्यं वा कथङ्कारं तथा भवेत् ॥ ५८ ॥
रागो द्वेषश्च मोहो हि चेष्टानिष्टविपर्ययैः ।
प्रत्ययजा ह्यतो रागो द्वेषो मोहश्च न स्वतः ॥ ५९ ॥
यस्मिन् रागो भवेत्तस्मिन् द्वेषमोहौ यतस्ततः ।
विकल्पतो हि जायन्ते नो विकल्पोऽपि तत्त्वतः ॥ ६० ॥
ये विकल्प्या न ते सन्ति कल्प्याभावे क्व कल्पनम् ।
प्रत्ययैर्जनितत्त्वाद्धि शून्ये कल्प्यककल्पने ॥ ६१ ॥
चतुर्विपर्ययै र्जाता नाविद्या तत्त्वदर्शनात् ।
तदभावे न संस्काराः स्युः शेषा अपि तादृशाः ॥ ६२ ॥
यद्यत्प्रतीत्य यज्जातं तदभावे न तत्ततः ।
भावाभावाश्च संस्कारासंस्काराः शान्तनिर्वृताः ॥ ६३ ॥
हेतुप्रत्ययजा भावाः कल्प्यन्ते ये च तत्वतः ।
प्रोक्ता शास्त्रा ह्यविद्या सा द्वादशाङ्गं ततो भवेत् ॥ ६४ ॥
भावशून्यत्वसज्ज्ञानान्नाविद्या तत्त्वदर्शनात् ।
सो ह्यविद्यानिरोधोऽतो द्वादशाङ्गं निरुध्यते ॥ ६५ ॥
मायामरीचिगन्धर्वपुरबुद्बुदफेनवत् ।
संस्काराः स्वप्नसंकाशा विद्यन्तेऽलातचक्रवत् ॥ ६६ ॥
भावः स्वभावतः कश्चिन्नात्राभावोऽपि विद्यते ।
हेतुप्रत्ययतो जातो भावोऽभावश्च शून्यकः ॥ ६७ ॥
सर्वभावस्वभावानां शून्यत्वादुपदिष्टवान् ।
सर्वे प्रतीत्यजा भावा इत्यतुल्यस्तथागतः ॥ ६८ ॥
तन्मात्रः परमार्थो हि भगवान् बुद्ध उक्तवान् ।

लोकवर्तनमाश्रित्य सर्वं नाना यथार्थतः ॥ ६९ ॥
लोकभासनभङ्गो न धर्मः कश्चिन्न तत्त्वतः ।
भीतोऽज्ञोऽकल्पनिर्हारे सौगते वचने त्वतः ॥ ७० ॥
इदम्प्रतीत्य चास्तीदं न रोधो लोकपद्धतेः ।
प्रतीत्यजः स निःसत्त्वः सन्त्येते निश्चयः कथम् ॥ ७१ ॥
तत्त्वान्वीक्षारतः श्राद्ध उक्ते कुत्रापि न स्थितः ।
प्राप्य युक्त्या नयं शान्तः भावाभावप्रहाणतः ॥ ७२ ॥
इदम्प्रत्ययताज्ञानात्दृष्टिजालविनिर्गतः ।
अस्पृष्टं याति निर्वाणं रागप्रतिघमोहहः ॥ ७३ ॥

शून्यतासप्ततेर्वृत्तिः आचार्यनागार्जुनपादकृता समाप्ता ॥